# जागदीश्यवच्छेदकत्वनिरुक्तिः




॥ श्रीकाशीविश्वनाथपुरीमेढुंढिराजगणेशकेपासदाऊजीअग्निहोत्रीकेसिद्धविनाय
कयंत्रमेजागदीश्यवच्छेदकत्वनिरुक्तिछापागयाजिसैलेनाहोयउसैढुंढिराजगणेशके
पासदाऊजीअग्निहोत्रीकेदुकानपरमिलेगा लि॰रामदासछापनेवालावचनूसंवत १९४६

पहिलीवार ३००

प्रोप्राईटरगणेशशर्म्माद्वाजपेयीसिद्धविनायकप्रेसबनारस ता: ८ जून सन् १८९०

जा॰अ॰ ॥ श्रीगणेशाय नमः ॥ नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः सम्भवति चलधौधर्म्मे गुरौ तदभावात् प्रमेयधूमत्वकम्बु
१ ग्रीवादिमत्वघ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसंगात् नाप्यनतिरिक्तवृत्तित्वं प्रतियो
गितायाः स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्तिभिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात्। न च तथाविधयत्किंचिदेकाभाव
प्रतियोगितासामान्यशून्यावृत्तित्वं तत् ॥ अत एवातिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे न तस्या
धनमपि साधु संगच्छत इति वाच्यं वह्निघटवृत्तिद्वित्वतार्णतार्णदहनवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितान
तिरिक्तवृत्तिवह्नित्वादावतिप्रसंगात् एतेनान्यूनवृत्तित्वविशेषितमपि परास्तम् अत एव नानाप्रतियोगिवृत्त्येकप्रतियोगि
तांगीकारेऽपि न निस्तारः लघुरूपसमनियतगुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः तादृशतदवच्छिन्नत्वाप्रसिद्धेरिति चे
न्न प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात्। स्वसमानवृत्तिकं चावच्छेदकं ग्राह्यं तत्त्वञ्च स्वपर्य्याप्त्यधि
करणपर्य्याप्तिवृत्तिकत्वं यावत्त्वादिकन्तु न तथा पर्य्याप्तिश्चायमेको घट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष
एवं त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः घटकत्वावच्छेदकत्वं स्वरूपसम्बन्ध
विशेषः एवञ्च यद्धर्म्मावच्छिन्नेत्यत्र यद्धर्म्मान्यूनवृत्तिधर्म्मावच्छिन्नेति वक्तव्यं तेनोक्ताव्याप्तिनिरासः। वस्तुतस्तु तदवच्छिन्न रा॰
प्रतियोगिताकाभाववदसंबद्धस्वविशिष्टसामान्यकत्वं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वं वा तद १

नतिरिक्तवृत्तित्वंवक्तव्यम् अतएवसत्तावान् जातेरित्यादौजातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्ता
त्वतुल्यवृत्तिकत्वेऽपिसत्तात्वस्यनक्षतिः एवंस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वंबोध्यंतादृशप्र
तियोगिताश्चविशिष्योपादेयाः नातोगुरोरवच्छेदकत्वंविनाद्रव्यत्वंप्रतियोगित्वंसम्बन्धित्वञ्चसाध्यतावच्छेदकसम्बन्धे
नबोध्यमतोनसम्बन्धभेदमादायदोषः। कालिकविशेषणताविशेषेणचसाध्यतायांतादृशप्रतियोगितावच्छेदकत्वमनित्य
तन्नद्यक्तित्वेप्रसिद्धम् अभावश्चप्रतियोगिव्यधिकरणोबोध्यः। नचमौलमिदमीयञ्च प्रतियोगिवैयधिकरण्यमनुपादेयंसं
योगत्वाद्यवच्छिन्नाभाववतिसंयोगत्वादिविशिष्टस्यवृत्तेर्गुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वद्रव्यमात्रसम
वेतत्वाद्यवच्छिन्नाभाववतिचावृत्तेरव्याप्तसतिव्याप्योरनवकाशादितिवाच्यं धूमवान् वन्हेरित्यादावतिव्याप्तेः नह्युत्पत्ति
काल्यवच्छेदेनापिमहानसादौकिंचित्संयोगेनवर्ततेयेनवन्हिमदयोगोलकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायो—
——गोलकावृत्तिद्रव्यत्वाद्यवच्छिन्नाभाववदवृत्तित्वंधूमत्वविशिष्टस्यसंभाव्येत। प्रतियोगितयोरेकसम्बन्धावच्छिन्न
त्वस्यविशेषणताविशेषावच्छिन्नत्वस्यवाविवक्षणेपुनरनुपादेयमेवप्रतियोगिवैयधिकरण्यद्वयम् यत्राधिकरणेव्य
भिचारस्तदन्यत्ववत्वदन्यत्वप्रकारकप्रमाविषयत्वत्वसाध्यवत्वप्रकारकप्रमाविषयत्वत्वादीनांसाध्यतावच्छेदकविशिष्टसा
ध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वाद्धेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्च।

जा॰ अ॰ निव्याप्तेरनवकाशात् तथाच विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकाव
२ च्छेद्यत्वं तत्संबन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्येनास्तिसाधने तद्धर्मविशिष्टसामानाधिक
रण्यं व्याप्तिरिति पर्यवसितोऽर्थः यत्र सद्धेतु विशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि
वदन्ति गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान्। नास्तीति प्रतीतिवलात् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगिता
याः न चास्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनं तथाविधयत्किंचिद्व्यक्तिसत्व एव तादृशप्रतीतेरुदयात् अत एवैकघट
वतिभूतले कम्बुग्रीवादिमान् नास्तीति शब्दो न प्रमाणं प्रमाणञ्च घटसामान्यशून्ये न चेदेवं लघुरूपसमनियतानां गुरूणामव्या
प्यतापत्तिः गुणादिगुणकर्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगितायालाघ
वेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वन्वेनैवावच्छेदात् तत्तदवच्छेदकत्वे व्यक्तीनांच प्रातिस्विकरूपेणाभावानांयु
गसहस्रेणापि ज्ञातुमशक्यत्वात् एवं द्रव्यत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसंगोऽप्यनुसन्धेयः उपदर्शितप्रकाराणामपि
स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात् अत एव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधु संगच्छत इत्यपि केचि
दिति कृतं पल्लवितेन॥ इत्यवच्छेदकत्वनिरुक्तेः शिरोमणिः॥ ॥ अथावच्छेदकत्वनिरुक्तिः॥ ॥ इहानवच्छेदकत्वमित्यत्रा रामः
वच्छेदकत्वमवच्छेदकत्वपदार्थः विशिष्टसत्तात्वसमनियतस्य सत्तात्वस्य लघुनोऽपि न विशिष्टाभावस्य प्रतियोगितावच्छेदक २

त्वंगुणादावपिसत्तानास्तीतिप्रतीतिप्रसंगात् पृथिवीसमवेतत्वासमनियतस्यापिचसमवेतत्वस्यपृथिवीसमवेताभावप्रति
योगितावच्छेदकत्वमनतिप्रसंगात् एवंघटरूपत्वस्यासमनियतमपिरूपत्वंव्यधिकरणसंयोगादिसम्बन्धावच्छिन्नघटरूपा
द्यभावस्यप्रतियोगितावच्छेदकमतःसमनैयत्यमकिंचित्करंयस्यावच्छेदकत्वस्वीकारेऽतिप्रसंगाद्यभावःसएवावच्छेदकइ
त्याशयेनाहसंभवतीति अतिप्रसंगाद्यनापादकेलघौसंभवतीत्यर्थः प्रमेयधूमत्वस्यतादृशप्रतियोगितावच्छेदकतापर्याप्त्य
धिकरणधूमत्वानतिरेकादाह। कंबुग्रीवेति नचकंबुग्रीवादिमत्त्वंकंबुग्रीवादिव्यक्तिरेवसाचप्रत्येकंहेतुमन्निष्ठाभावप्रतियो
गितावच्छेदिकैवेतिकुतोतिव्याप्तिरितिवाच्यं परम्परयासंस्थानगतकंबुग्रीवात्वादिजातिमत्त्वस्यैवसाध्यतावच्छेदकत्वात् त
स्यचपरंपरयावच्छेदकत्वकल्पनामपेक्ष्यलाघवेनघटत्वस्यैवसाक्षात्तथात्वादितिभावः ननुपृथिवीत्वतेजस्त्वादिसांकर्या
त् घटत्वंयदिनानातत्तदानेकमपिघटत्वंकंबुग्रीवादिमत्त्वसमनियतमतआह। घ्राणग्राह्येति घ्राणग्राह्यगुणत्वापेक्षयालघोर्ग्रा
ह्यगंधत्वस्यैवप्रतियोगितावच्छेदकत्वादितिभावः अन्यथापरमाणोर्गंधत्वेनसहघ्राणग्राह्यगुणत्वस्यसमनियतत्वाभावा
त् गंधत्वस्यैवप्रतियोगितावच्छेदकत्वाभावादितिभावः अत्रघ्राणग्राह्यगुणत्वंघ्राणग्राह्यत्वेसतिगुणत्वाव्यापकजातिमत्त्वं
तेनगंधत्वस्यलघोःसमनैयत्येतात्पर्यमित्यपिकश्चित् अतत्थात्वेनप्रतियोगितानवच्छेदकत्वेनरूपेणप्रमेयधूमत्वादिरू
पेणेत्यर्थः।व्यभिचारिणिप्रमेयत्वादौसपक्षवृत्तिप्रमेयत्वादौतेनविरुद्धसाध्यसामानाधिकरण्याभावादतिव्याप्त्यभावेपिन

जा.अ. स्तिः नापीति तादृशप्रतियोगितायास्तत्तद्व्यक्तित्वावच्छिन्नाभाववद्वृत्तित्वमपि नेत्यर्थः तेन तादृशप्रतियोगिताप्रतियो
३ गिकाभाववद्वृत्तितया धूमत्वादेरवच्छेदकत्वाभावादतिप्रसंगसंभवात्स्वरूपसंबन्धात्मिकाया इत्यस्य नवैयर्थ्यं नवाग्निमग्र
न्थविरोध इति ध्येयं स्वरूपसंबन्धात्मिकाया इति प्रतिव्यक्तिभिन्नत्वे हेतुः न तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थः त
त्प्रतियोगिमात्रस्वरूपत्वे सामान्याभावविशेषाभावयोः प्रतियोगितायामविशेषापत्तिरिति ध्येयं धूमत्वादेरपीति तथा च धू
मवान्वह्नेरित्यादौ व्याप्तिलक्षणातिव्याप्तिरिति भावः न चेति वाच्यमिति परेणान्वयः तथाविधेति यत्किंचित्पदं व्याप्यवृत्तिसाध्य
कस्थलीयलक्षणाभिप्रायेण तथा च तथाविधो हेतुसमानाधिकरणो यो यत्किंचिदभावस्तत्प्रतियोगित्वावच्छिन्नाभाववद्वृत्ति
त्वं तत्रार्थः तथाविधाभावीयप्रतियोगितासामान्यस्तु न्यूनत्वमप्रसिद्धं सर्वस्यैव वस्तुनस्तादृशयावत्त्वावच्छिन्नाभावप्रतियो
गितासत्त्वादत उक्तं यत्किंचिदिति समनियताभावयोरैक्यानुपगमाच्च तेन घटादिसामान्याभावस्यैव घटीयादिसंयोगसम्बन्धे
न प्रमेयादिसामान्याभावतया पुनर्नाप्रसिद्धिः एकधर्मावच्छिन्नार्थकं पदं अव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्त्यभिप्रायेण
तथाविधाया एकधर्मावच्छिन्नाप्रतियोगिता तत्सामान्यशून्यावृत्तित्वमिति योजना यत्प्रतियोगितायाऽवच्छेदकीभूतधर्मा
वच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगितायाऽवच्छेदकीभूतधर्मावच्छिन्नप्रतियोगितासामान्यशून्यत्वं तत्रार्थ इति रा.मः
वस्तुगतिः एकपदं शृंगग्राहिकतया तत्तदभावप्रवेशार्थमिति तु रिक्तं वचस्तन्निवेशवैयर्थ्यात् यत्किंचित्पदेनैव तल्लाभा ३

द्रितिध्येयम्। यद्यपिप्रमेयवान्वाच्यत्वादित्यादौसमवायेनसाध्यतायांव्यभिचारिण्यतिव्याप्तिः प्रमेयत्वावच्छिन्नाभावप्रतियोगि
तासामान्यशून्यत्वाप्रसिद्धेः तादृशाभावांतरस्यनिरुक्तप्रतियोगितानवच्छेदकतायाः प्रमेयत्वेसत्वात्तथापितादृशयत्किंचि
देकाभावप्रतियोगितात्वंयद्धर्मव्यापकतावच्छेदकंतत्त्वंविवक्षितमस्तिचप्रमेयत्वव्यापकत्वंप्रमेयसामान्याभावप्रतियोगि
तायामित्यदोषः तत् अवच्छेदकत्वं अतएवेति यत्किंचिदेकाभावव्यक्तेः प्रवेशादित्यर्थः यदिसामान्याभावोनास्तितदावन्हि
मन्निष्ठतत्तद्धूमाभावप्रतियोगितासामान्यशून्येधूमांतरेवर्तमानतयाधूमत्वस्यनिरुक्तावच्छेदकत्वेनस्यादितिव्याप्तिलक्षणा
तिव्याप्तिनिरासार्थमेवसामान्याभावःसाधयिष्यतइतितथाचधूमसामान्याभावस्यैवहेतुसमानाधिकरणस्यप्रतियोगितासा
मान्यशून्येघटादावृत्त्याधूमत्वस्यावच्छेदकत्वमितिभावः ननुतादृशप्रतियोगितान्यूनानतिरिक्तवृत्तित्वंवाच्यंवन्हित्वंतुघ
टवृत्तितादृशप्रतियोगितान्यूनवृत्त्यतआह नार्णीतार्णीति अतिप्रसंगादिति तथाचव्याप्तिलक्षणासंभवइतिभावःएतेनेति
कांचित्कंतत्र एतेननतार्णीतार्णीभयाभावमादायदत्तदोषेणसामान्याभावप्रतियोगित्वमेकमेवसमस्तप्रतियोगिवृत्तिइतिनद
नतिरिक्तवृत्त्येवधूमत्वमतोनोक्तातिव्याप्तिरितिप्रगल्भोक्तंदूषयति। अतएवेति। उक्तरीत्यावन्हित्वादेरवच्छेदकत्वप्रसंगादे
वेत्यर्थः। ननुप्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वंस्वरूपसम्बन्धएववाच्यंस्वावच्छेद्यप्रतियोगिताकत्वेनसाध्य
तावच्छेदकंपुनर्विशेषणीयमतोगुरुधर्मेणसाध्यतायांनातिव्याप्तिरतआह। लघुरूपेति ननुघटत्वाम्महाकालत्वादित्या

दावव्याप्तिभियेव गुरुरूपेण साध्यतायामतिव्याप्तिभियापि प्रतियोगिताधर्मिकोभयाभावघटितं लक्षणं वाच्यमतस्तदपि
दूषयति लघुरूपेणेत्यादिनेत्यपि कश्चित् वह्नित्वादिलघुरूपसमनियतं यत्प्रमेयवह्नित्वादिकं तद्रूपेण साध्यतायां धूमादा
वव्याप्तिरित्यर्थः। प्रतियोगितावच्छेदकेति हेतुसमानाधिकरणाभावप्रतियोगितायां यदवच्छेदकं तदभाववद्वृत्तित्वस्य मू
लस्य प्रतियोगितावच्छेदकांतेन न विवक्षितत्वादित्यर्थः। अत्र येन संबन्धेन प्रतियोगितावच्छेदकत्वं तेनैव तदभावो ग्राह्यस्तेन
धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य घटत्वादेः कालिकादिसम्बन्धेनाभाववत्यात्मादौ वह्नित्वादेः समवायेनावृत्तताव
पिनोक्तावच्छेदकत्वं न वा धूमत्वादेः संयोगादिसंबन्धेन स्वाभाववति समवेतत्वेप्यवच्छेदकत्वहानिः यत्तु साध्यतावच्छेदकता
घटकसंबन्धेन तदभावो ग्राह्य इति तत्तुच्छं धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादावतिव्याप्तेः लघुतया हेतुमन्निष्ठतादृश
प्रमाविशेष्याभावप्रतियोगितावच्छेदकीभूतस्य धूमत्वादेः स्वरूपसम्बन्धेनाभाववति धूम एव तादृशप्रमाविशेष्यत्वस्य वृत्तेः तद्वृ
त्तित्वं च स्वरूपसंबन्धेन तद्वृत्तिसाध्यतावच्छेदकताघटकसम्बन्धेनावर्त्तमानत्वं नातो धूमत्वाभावस्यैव कालिकसम्बन्धेनाश्रये
धूमे समवायेन स्वरूपसम्बन्धेन च तदाश्रये संदादौ कालिकविशेषणतया धूमत्वस्य वर्त्तमानत्वात् अवच्छेदकत्वहानिः न च
तथा सति समवायेन प्रमेयस्य साध्यतायां भाववत्त्वादावतिव्याप्तिः प्रमेयत्वरूपस्यावच्छेदकस्याभावाप्रसिद्ध्याप्रतयभावस्य लक्ष रामः
णघटकत्वादिति वाच्यं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मान्यूनवृत्तित्वस्यैव विवक्षितत्वात् तत एव समवायेन सत्ता ४

अयस्यसाध्यत्वेपितादृशावच्छेदकीभूतस्यसत्वस्याभाववदतिसामान्यादौसाध्यतावच्छेदकताघटकीभूतसमवायसम्बन्धेन
वृत्तेरप्रसिद्धावपिभाववत्वादिहेतौनातिव्याप्तिः। इदंतुचिंत्यतेतादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तिभिन्नत्वापेक्षयानञ्
र्थद्वयाप्रवेशेनलाघवात्तादृशावच्छेदकंयद्यत्तत्तदन्यैकानतिरिक्तवृत्तित्वंसाध्यतावच्छेदकस्यविशेषणंवक्तुमुचितं ननुधूमा
दिमन्निष्ठाभावप्रतियोगितावच्छेदकंयद्यद्वन्ह्यादिनिष्ठंतार्णतार्णदहनोभयत्वंयावत्वंवातदनतिरिक्तवृत्त्येववन्हित्वादिक
मितिव्याप्तिलक्षणमसंभवीत्यतआह। स्वसमानेतिस्वमनतिरिक्तवृत्तित्वेनाभिमतम्। तथाचस्वसमानवृत्तिकंयद्धेतुमन्निष्ठाभाव
प्रतियोगितावच्छेदकंतदनतिरिक्तवृत्तित्वमर्थः। ननुस्वसमानवृत्तिकत्वंस्वान्यूनानतिरिक्तवृत्तित्वंतथाचवन्हिनिष्ठयावत्वा
देरपिसमवायादिनावन्हित्वादिसमानवृत्तित्वमेवातआह। तत्वंचेतिस्वसमानवृत्तिकत्वंचेत्यर्थः पर्य्याप्तीतिनचवन्हित्वपर्य्या
प्त्यधिकरणेयावत्येववन्हौवृत्तियावत्वादेःपर्य्याप्तत्वाद्वन्हित्वस्यावच्छेदकत्वंदुर्वारमितिवाच्यंस्वपर्य्याप्त्यवच्छेदकधर्माव
च्छिन्नपर्य्याप्तिकत्वस्योक्तत्वात् वन्हित्वपर्य्याप्त्यवच्छेदकीभूततत्तद्वन्हित्वावच्छेदेनयावत्वादेरपर्य्याप्तत्वात् नचैवमनतिरि
क्तवृत्तित्ववैयर्थ्यंवन्हित्वपर्य्याप्त्यवच्छेदकधर्मावच्छिन्नपर्य्याप्तिकतद्वन्ह्यन्यतरत्वादिकमादायवन्हित्वस्यापिपारिभाषिकाव
च्छेदकत्वापत्तेरितिभावः यावत्वादिकमिति आदिनातार्णतार्णोभयत्वादिसंग्रहः नतथेति नवन्हित्वपर्य्याप्त्यधिकरणपर्य्याप्तिक
मित्यर्थः ननुपर्य्याप्तिःसमवायःसचतार्णतार्णोभयत्वादावप्यस्तएवेत्यतआह। पर्य्याप्तिश्चेति अयमेकोघटइतिएकमात्रवृत्ति

जा॰अ॰ धर्मावच्छेदेन घटत्वस्य पर्य्याप्तिं दर्शयितुं इमौ द्वावित्युभयवृत्तिधर्मादेन द्वित्वस्य पर्य्याप्तिं दर्शयितुं अन्यथा द्वौ द्वित्ववानिति प्र
५ तीत्योरविशेषप्रसंगादिति भावः न चायमेक इत्यादिप्रतीतेः समवायेनैवोपपत्तौ एकत्ववन्हित्वादेः पर्याप्तिसंबन्धत्वे मानाभावा
त्ताद्रूप्येण साध्यतायां व्यभिचारिण्यतिव्याप्तिरिति वाच्यं इदंत्वावच्छिन्ने एव वन्हित्वमेकत्वं च पर्य्याप्तं न तु द्वित्वमित्याद्यनुभवा
देव नदभ्युपगमादिति भावः व्यासज्यवृत्तित्व नदन्यतरस्वरूपेणैव स्वसमानवृत्तित्वोक्त्यापि वन्हित्वादिवारणसंभवे स्वपर्य्याप्त्या
दि पर्यंतानुधावनस्य प्रयोजनमाह त्रित्वादिकमिति तथा च धूमवन्निष्ठाभावप्रतियोगितावच्छेदकस्य वन्हिधूमघटत्रितयत्वस्य
व्यासज्यवृत्तितया स्वसमानवृत्तिकस्य तस्यैव नातिरिक्तवृत्तित्वं वन्हिधूमोभयत्वस्यापीति ताद्रूप्येण स्वसमानवृत्तिकत्वोक्तौ वन्हि
धूमोभयवान् धूमादित्यादावेव व्याप्तिलक्षणाव्याप्तिः स्यादिति भावः यद्यपि तार्णतार्णोभयत्वाद्यवच्छिन्नाभावस्य प्रतियोगिताव
च्छेदकताघटकसंबंधः पर्य्याप्तिरेव न तु समवायः तार्णमात्रसत्वेपि तार्णतार्णोभयं नास्तीति प्रतीतेः तथा च प्रतियोगितावच्छे
दकताघटकपर्य्याप्तिसंबन्धेन तादृशोभयत्वाद्यभाववति प्रत्येकवह्नौ वृत्तिमत्वादेव वन्हित्वादेरवच्छेदकत्वासंभवात् स्वसमा
नवृत्तिकेति व्यर्थं तथापि प्रत्येकवन्हौ पर्य्याप्तिसम्बन्धेनापि न तार्णतार्णोभयत्वादेरभावः किंतु घटादावेव अन्यथा तत्सम्बन्धे
न प्रत्येकावृत्तिधर्मस्य न तत्संबंधेन समुदायावृत्तित्वनियमात् उभयत्रैव प्रत्येकं द्वित्वाभावसत्वादिमौ न द्वावित्यपि प्रतीत्यापत्तेः न रामः
चैवमयं द्वावित्यपि प्रत्यक्षप्रतीतिः प्रमा स्यादेकव्यक्तावपि द्वित्वस्य पर्य्याप्तिसम्बंधेन सत्वादिति वाच्यं मूलावच्छिन्नो वृत्तः कपिसं ५

योगीत्यादिप्रतीतेर्मूलावच्छेद्यसमवायेन कपिसंयोगाद्यवगाहित्ववदुक्तप्रतीतेरपीदंत्वावच्छेद्यपर्य्याप्तिसंबन्धेनैव द्वित्वाव
गाहितया प्रमात्वायोगात् एकव्यक्तेरिदंत्वावच्छेद्यपर्य्याप्तिसंबन्धेन द्वित्वरहितत्वात् अत एवायं न द्वावित्यादिप्रतीतेः प्रमात्व
मुपपद्यते इदंत्वावच्छेद्यपर्य्याप्तिसम्बन्धेन योद्वित्वस्याभावस्तद्व्यक्तितदवगाहितत्वात् न चेदंत्वावच्छेद्यपर्य्याप्त्यप्रसिद्धेः ए
कत्ववह्नित्वादौ न तत्सौलभ्यात् एकत्वं वह्नित्वं चेदंत्वावच्छिन्ने पर्य्याप्तं न तु द्वित्वादिकमित्यनुभवस्य सर्वसिद्धत्वात् न चैकस्य
द्वित्वपर्य्याप्त्यधिकरणत्वे घटद्वयशून्येपि गृहादावत्र घटाविति प्रतीतिः ॥ ॥ प्रमास्यादितिवाच्यं तद्गृहनिष्ठे घटे घटद्वय
त्वावच्छेदेन तद्गृहवृत्तित्वविरहात् घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वावगाहिन्यां प्रोक्तप्रतीतेर्भ्रमत्वात् अत एव घटो न तद्गृ
हनिष्ठ इत्याकारकधीस्तत्र प्रमा तद्गृहस्थितस्यापि घटस्य घटद्वयत्वावच्छेदेन तन्निष्ठत्वाभावसंभवात् घटपटयोर्न घटत्व
मित्यादिप्रतीतेः प्रमात्वानुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकस्य प्रतियोगिमत्यपि तदभावस्य सर्वसंमतत्वात् न च
घटत्वादौ घटपटोभयवृत्तित्वाभाव एवोक्तप्रतीतिविषयः सामान्यघटयोर्न समवायेन घटत्वमित्यादौ सामान्यघटोभयसमवे
तत्वाप्रसिद्ध्या तदभावस्य भानासंभवादिति संप्रदायविदः परे तु तदनतिरिक्तवृत्तित्वमत्र न तदभाववद्वृत्तित्वं तथा सति हेतु
मन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं प्रत्येकं तदभाववान् वह्निर्धूमश्चेति तदुभयवृत्तित्वस्यैव वह्निधूमोभय
त्वे सत्वात् तादृशरूपेण साध्यतायां वह्न्यादिहेतावतिव्याप्त्यापत्तेः किं तु तादृशप्रतियोगितावच्छेदकवती यावती व्यक्तिस्तद्भेदकूटव

जा॰ आ॰ दवृत्तित्वमेव तथा वाच्यं तथा च वन्हिमान् धूमादित्यत्र व्याप्तिरेव तादृशावच्छेदकीभूतं यत्तार्णतार्णोभयत्वादिकं तद्भूतो निखि
६ लवन्हेः प्रत्येकभेदकूटवति वन्हित्वस्यावृत्तेरतः स्वसमानवृत्तिकत्वं देयमेवेति वदंति तत्तुच्छं हेतुमन्निष्ठाभावप्रतियोगिताव
च्छेदकयद्धर्मवत्त्वं तदभाववति पर्य्याप्तिसंबन्धेन वन्हिधूमोभयत्वस्यावृत्तित्वादेव नाद्रूप्येण साध्यतायां वन्हिहेतावतिव्याप्त्यभा
वाद्भेदकूटनिवेशव्यर्थतापातादिति केचित्तु तार्णतार्णोभयेनास्तीति प्रतीतौ प्रतियोगितावच्छेदकतानिर्वाहकः समवाय एव स
म्बन्धो भासते न तु पर्य्याप्तिः दण्डिपुरुषत्वाश्रयस्य सत्त्वेपि न दवच्छिन्नाभाववत्तादृशोभयत्वाश्रयस्य तार्णमात्रस्य सत्त्वेपि तादृशोभ
यत्वावच्छिन्नाभावो न विरुद्धस्तदवच्छिन्नाधिकरणतयामाद्भेमेव तस्य विरोधात् एवं च यथाश्रुतमेव सम्यगित्याहुस्तच्चिंत्य
वस्तुतस्तु समवायेन प्रमेयसाध्यकेभाववत्त्वादिहेतावतिव्याप्तिवारणार्थमवश्यं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमि
त्यस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदन्यूनवृत्तितत्त्वमर्थो वाच्यः तत्रान्यूनवृत्तित्वं न प्रतियोगितावच्छेदकताघ
टकसम्बन्धेन वाच्यं वन्हिधूमोभयवान्वन्हेरित्यादावतिव्याप्तेः हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वन्हिधूमोभयत्वं त
स्य तादृशपर्य्याप्त्यधिकरणं यद्वन्हिधूमोभयं तत्प्रत्येकनिष्ठस्य पर्य्याप्तिसंबन्धावच्छिन्नाभावस्य प्रतियोगित्वसत्त्वेन वन्हि
धूमोभयत्वादिकं प्रतिन्यूनवृत्तित्वात् किंतु स्वावच्छिन्नप्रतियोगित्वसम्बन्धेनैव तथात्वं वाच्यं तथा च वन्हिनिष्ठयाव रामः
त्तार्णतार्णोभयत्वादेरपि स्वावच्छिन्नप्रतियोगित्वसम्बन्धेन वन्हित्वादिकं प्रत्यन्यूनवृत्तित्वात् वन्हिमान् धूमादित्या ६

दौवन्हित्वादेरवच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वेनावच्छेदकं विशेषणीयमितियुक्तमुत्पश्यामः ननुप्रतियोगिता
वच्छेदकानतिरिक्तवृत्तित्वमित्यस्य घटकं प्रतियोगितावच्छेदकत्वं यदि प्रतियोगितानतिरिक्तवृत्तित्वरूपं तदा ताणीता
र्णोभयत्वावच्छिन्नाभावमादाय वन्हिमान्धूमादित्यादौ वन्हित्वं पारिभाषिकावच्छेदकं स्यात् तत्राह। घटकमिति प्रतियोगि
ताधर्मिकोभयोभावघटितलक्षणे गुरुरूपेण साध्यतायामव्याप्तिमपाकर्तुमाह एवंचेति ननुधूमत्वमेकस्मिन्नेव पर्याप्तमि
त्यादिप्रतीतेः प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणताकत्वावगाहितयैवोपपत्तौ धूमत्वादेः पर्याप्तिसंबंधत्वे मानाभाव इति धू
मवान्वन्हेरित्यादावतिव्याप्तिः स्वपदेन धूमत्वस्य गृहीतुमशक्यत्वात् एवंसत्तात्वस्य विशिष्टसत्तात्वानतिरिक्तवृत्तितयास
त्वादिसाध्यकजातिमत्वादिहेतावव्याप्तिश्चेत्यत आह। वस्तुतस्त्विति। तदवच्छिन्नेति। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकी
भूततद्धर्मावच्छिन्नाभाववत्यसम्बद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमित्यर्थः अत्र तदाश्रयप्रतियोगि
ताकाभावेत्युक्तौ तादृशधूमत्वाश्रयप्रतियोगिकोभयाभावादिमति प्रमेयधूमत्वविशिष्टस्य संबद्धतयावच्छेदकत्वं न स्यात्किंतु
गगनत्वादेरेव तथात्वं स्यादत उक्तं तदवच्छिन्नेति प्रतियोगित्वं साध्यतावच्छेदकसम्बन्धेन ग्राह्यं तेनायं घट एतत्वादित्यादौ हे
तुमन्निष्ठाभावप्रतियोगितावच्छेदकं पटत्वं संबंधसामान्येन कालिकसंबंधेन वा तदवच्छिन्नाभाववति नित्यगुणगगनादौ
घटत्वत्वविशिष्टस्यासंबद्धत्वेपि नाव्याप्तिः पर्वतादेरुत्पत्तिकालावच्छेदेन संयोगसम्बन्धावच्छिन्नधूमाभाववत्वात् तत्र च धू

जा॰ ऋ॰ मत्वविशिष्टस्यसम्बद्धत्वात् तदसम्बद्धस्वविशिष्टसामान्यकंगगनादिकमुपादायधूमवान्वन्हेरित्यादावतिव्याप्तिरतःप्र
७ तियोगीव्यधिकरणत्वेनतदवच्छिन्नाभावोविशेष्यःप्रतियोगितावच्छेदकसंबंधेनप्रतियोगितावच्छेदकावच्छिन्नासं
बंधीनतदवच्छिन्नाभाववान्ग्राह्यइतितुपर्य्यवसितार्थः।तेनसंयोगसम्बन्धावच्छिन्नधूमाभाववस्यधूमवत्पर्वतादौसम
वायादिसंबंधेनप्रतियोगिव्यधिकरणत्वेपिधूमत्वस्यनावच्छेदकत्वहानिःनवाद्रव्यंघटत्वादित्यादौहेतुमन्निष्ठाभावप्रति
योगितावच्छेदकंयद्घटभिन्नद्रव्यत्वत्वंप्रतियोगिव्यधिकरणेनतदवच्छिन्नाभाववतिगुणादौद्रव्यत्वत्वविशिष्टस्यासत्वेप्य
व्याप्तिः।वस्तुतोनिरुक्तप्रतियोग्यनधिकरणत्वमेवतदवच्छिन्नाभाववतःसाध्यतावच्छेदकसंबंधेनवाच्यंनतुप्रतियोगिता
यास्तत्संबन्धावच्छिन्नत्वंवृत्त्यनियामकसम्बन्धेनसाध्यतायांतत्संबंधावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याव्याप्तिप्रसंगादिति
ध्येयंनचघटवान्महाकालत्वादौतादृशप्रतियोगितावच्छेदकंयद्गगनत्वंतदवच्छिन्नाभावस्यप्रतियोगिवैयधिकरण्या
प्रसिद्ध्याव्याप्तिरितिवाच्यंअत्रापिसाध्यतावच्छेदकसम्बन्धसामान्येतादृशधर्मावच्छिन्नप्रतियोगिकत्वयद्यनुयोगिकत्वो
भयाभावस्तदसम्बद्धत्वस्यविवक्षितत्वात् तदसम्बद्धत्वमपिसाध्यतावच्छेदकसम्बन्धेनसम्बद्धत्वसामान्याभावोबोध्यःते
नघटत्वाद्यवच्छिन्नाभाववतिगगनत्वविशिष्टस्यापियथाकथंचित्तादात्म्यादिनासंबद्धतयानपारिभाषिकावच्छेदका राम:
प्रसिद्धिनिबन्धनोव्याप्तिलक्षणासंभवः।नवातादृशप्रतियोगितावच्छेदकीभूतमहानसीयवन्हित्वावच्छिन्नाभाववतिज ७

लादौवन्हित्वविशिष्टस्यासम्बद्धत्वाद्वन्हिमान्धूमादित्यादावव्याप्तिर्धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्वन्हित्वाव
च्छिन्नाभाववतिवन्हित्वविशिष्टस्यतत्तद्वन्हेरसम्बद्धत्वाद्वन्हिमान्धूमादित्यादौवन्हित्वमप्यवच्छेदकंस्यादतःसामान्यपदं
ननुकालिकादिसम्बन्धेनगगनत्वविशिष्टंघटादितस्यतादृशप्रतियोगितावच्छेदकीभूतगगनत्वाद्यवच्छिन्नाभाववतिसाध्य
ताघटकसम्बन्धेनसम्बद्धत्वात् पारिभाषिकावच्छेदकाप्रसिद्ध्याव्याप्तिलक्षणासम्भवः नचसाध्यतावच्छेदकताघटकसम्ब
न्धेनस्ववैशिष्ट्याभिधानान्नैषदोषः पुरुषनिष्ठसंयोगसम्बन्धेनदंडवतः कालिकविशेषणतयासाध्यतायांमहाकालत्वहेताव
व्याप्यापत्तेः गगनत्वादेः पुरुषनिष्ठसंयोगसम्बन्धेनावृत्त्यापारिभाषिकावच्छेदकाप्रसिद्धेः नचहेतुमन्निष्ठाभावप्रतियोगिता
वच्छेदकत्वंयादृशसम्बन्धावच्छिन्नंतेनैवसम्बन्धेनस्ववैशिष्ट्याभिधानात् घटत्वगगनत्वादौपारिभाषिकावच्छेदकत्वंसु
लभमितिवाच्यंधूमत्वप्रकारकप्रमाविशेष्यवान्वन्हेरित्यादावतिव्याप्तिः साध्यतावच्छेदकमपेक्ष्यलघोर्धूमत्वस्यैवसमवायेन
हेतुमन्निष्ठसंयोगसंबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतयासमवायेनचधूमत्वप्रकारकप्रमाविशेष्यत्वस्यावृत्त्यात
स्यपारिभाषिकावच्छेदकत्वाभावप्रसंगात् नचसाध्यत्वतादृशप्रतियोगित्वयोरन्यतरावच्छेदकताघटकसंबंधेनैवस्ववैशिष्ट्यस
विवक्षणान्नोक्ताव्याप्त्यतिव्याप्त्योः प्रसंग इतिवाच्यं तादात्म्येनधूमवतः संयोगेनसाध्यतायांद्रव्यत्वादावतिव्याप्त्यापत्तेः धूमापेक्षया
लघुत्वेनहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकंयद्धूमत्वंतदवच्छिन्नाभाववतितत्तत्परमाणौप्रतियोगितावच्छेदकताघटक

समवायसम्बन्धेन धूमविशिष्टस्य परमाणोः साध्यताघटकसंयोगसंबन्धेन संबद्धतया धूमस्य पारिभाषिकावच्छेदकत्वविरहा
दिति चेदत्राहुः यद्यत्संबंधेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसंबंधेनासंबद्धं तत्तत्संबंधेन त
तद्धर्मावच्छिन्नविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसंबधावच्छिन्नं विशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकधर्मवत्त्व
स्य विवक्षितत्वान्नोक्तदोषः समवायेन वन्हित्वावच्छिन्नविशेष्यताया स्वरूपादिसंबंधेन गगनत्वावच्छिन्नविशेष्यताभिन्नत्वादेवा
वच्छेदकाप्रसिद्धिनिबंधनासंभवस्याप्युदासादिति नन्वेवमपि विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेस्तादृशद्रव्यत्वाद्यभाववति गु
णादौ विशिष्टसत्त्वस्य संबद्धत्वात् स्वस्य तादृशधर्मावच्छिन्नाभाववन्निष्ठसम्बन्धितानवच्छेदकत्वविवक्षया कथंचित्तत्रातिव्याप्तिवा
रणेपि सत्तावान् भावत्वादित्यादावतिव्याप्तिः सत्तात्वाद्यवच्छिन्नाभाववृत्तिसामान्यादौ साध्यताघटकसमवायसंबंधित्वाप्रसिद्धेः स
त्तात्वस्य निरुक्तावच्छेदकत्वाभावात् न च साध्यतावच्छेदकसंबंधसामान्येन तदवच्छिन्नाभाववदनुयोगिकत्व यद्धर्मावच्छिन्नप्रतियोगि
कत्वोभयाभाववत्त्वं विवक्षितमतो नोक्तदोषः तथा सति प्रमेयधूमवान्वन्हेरित्यादावतिव्याप्त्यापत्तेः धूमत्वघटिततादृशोभयत्वापेक्ष
याप्रमेयधूमत्वघटिततादृशोभयत्वस्य गुरुतया तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यस्वरसादाह। स्वविशिष्टेति। स्वं पारिभाषिकाव
च्छेदकत्वेनाभिप्रेतं तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्विशिष्टसंबंधिनिष्ठाभावप्रतियोगितानवच्छेदकं स
एव पारिभाषिकावच्छेदकः तदन्यत्वं साध्यतावच्छेदकविशेषणेनिभावः अत्र विशिष्टसंबंधित्वं साध्यतावच्छेदकसंबंधेन ग्राह्यं ते

नप्रतियोगितावच्छेदकमात्रस्यैवयथाकथंचित्संबंधेनयत्स्वविशिष्टसंबंधितन्निष्ठाभावप्रतियोगितावच्छेदकत्वेपिनपारिभा
षिकावच्छेदकाप्रसिद्धिःअभावश्चात्रप्रतियोगिव्यधिकरणोबोध्यःतेनघटत्वाद्यवच्छेदकमात्रस्यैवस्वविशिष्टसंबंधिनिष्ठसंयो
गसंबंधावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात्पारिभाषिकावच्छेदकाप्रसिद्ध्यावन्हिमान्धूमादित्यादौनाव्याप्तिःप्रतियोगिताव
च्छेदकसंबंधेनप्रतियोगितावच्छेदकविशिष्टप्रतियोग्यसंबन्धित्वंस्वविशिष्टसंबंधिनोविशेषणंदेयमितितुफलितार्थःतेनाभाव
स्यैवयथाकथंचित्कालिकादिसंबंधेनप्रतियोगिनःसंबंधिनिवृत्तावपिनक्षतिःनवाहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतविशि
ष्टसत्तात्वादेःसत्तात्वाद्यवच्छिन्नसंबंधिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेपिसत्तावान्जातेरित्यादा
वव्याप्तिःतादृशप्रतियोगित्वंतुसाध्यतावच्छेदकसंबंधावच्छिन्नंग्राह्यंतेननघटत्वादेरपिस्वविशिष्टसंबंधिनिष्ठसमवायाद्यवच्छि
न्नप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेपिवन्हिमान्धूमादित्यादाववच्छेदकाप्रसिद्धिनिबंधनोदोषःवस्तुतःपूर्ववदिहा
वपिसाध्यतावच्छेदकसंबंधेननिरुक्तप्रतियोग्यसंबंधित्वमेवस्वविशिष्टसंबंधिनोवाच्यंतेनवृत्त्यनियामकसम्बंधेनसाध्यतायांतादृ
शसंबंधावच्छिन्नप्रतियोगित्वाप्रसिद्धावपिनाव्याप्तिःप्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वंहेतुसमानाधिकरणाभावप्रतियोगि
तावच्छेदकताघटकसंबंधेनबोध्यंतेनघटत्वादेर्विषयितासम्बन्धेनघटत्वादिविशिष्टस्यज्ञानादेःसंयोगेनाभावस्यप्रतियोगिव्यधि
करणस्यघटादिविशिष्टसंबंधिनिष्ठस्यप्रतियोगितायाविषयितासंबन्धेनावच्छेदकत्वेपिनतादृशावच्छेदकाप्रसिद्धिः।ननूक्तपारिभा

जा॰ अ॰ षिकावच्छेदकद्वयस्य प्रवेशे मूलोक्तप्रतियोगिव्यधिकरणस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणार्थकत्वं विफलं हेतुम
९ न्निष्ठाभावप्रतियोगितावच्छेदकस्य द्रव्यत्वत्वादेर्विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वादेव विशिष्टसत्तावान्
जातेरित्यादावतिव्याप्त्यभावात् न च संयोगेन घटाद्यभावस्यैव तत्समनियतघटविशिष्टवाच्यत्वाद्यभावत्वात् तत्प्रतियोगितावच्छिन्नस्य
च वाच्यत्वस्य सर्वत्र सत्वात् प्रतियोगिव्यधिकरणस्यैवाप्रसिद्धिः स्याद्यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवे
शो न स्यादिति वाच्यं यत्प्रतियोगितावच्छिन्नस्यानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतधर्मो यद्विशिष्टसंबंधिनिष्ठप्र
तियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकस्तत्पारिभाषिकावच्छेदकमित्यस्य निर्दोषत्वात् घटाभावस्य घटविशिष्टवाच्यत्वा
भावस्वरूपत्वेपि तस्य घटत्वावच्छिन्नं यत्प्रतियोगित्वं तदाश्रयव्यधिकरणत्वस्य सुलभत्वादिति न च तत्रावच्छेदकभेदेपि प्रतियो
गितैक्यं युक्तं घटपटाद्यभावानामप्येकप्रतियोगिताकत्वापत्तेरिति चेदत्राप्रांचः यत्प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तत्प्रतियो
गितावच्छेदकेत्याद्यभिधाने वन्हिमान्धूमादित्यत्राव्याप्तिः स्वरूपसम्बंधात्मिकायाः प्रतियोगितायाः प्रतिव्यक्तिभिन्नत्वात् वन्हित्वावच्छि
न्नाभावीयं महानसीयवन्हिवन्हिनिष्ठं यत्प्रतियोगित्वं तदवच्छिन्नानधिकरणहेतुमत्पर्वतादिनिष्ठवन्हिसामान्याभावप्रतियोगिताव
च्छेदकीभूतवन्हित्वादेः स्वविशिष्टसंबंधिनिष्ठनिरुक्तप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वात् प्रतियोगिताव राम:
च्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवेशे तु तादृशप्रतियोगितायावच्छेदकं यद्वन्हित्वादिकं तदवच्छिन्नानधिकरणत्वं न हे ९

तुमतः पर्वतादेरित्यदोषइत्याहुः परेतु प्रतियोगिभेदेप्येकधर्मावच्छिन्नप्रतियोगिता लाघवादेकैवेतिमते वन्हिमान्धूमादि
त्यादौनाव्याप्तिः परंतु तद्रूपान्यत्वविशिष्टसत्तावान् रूपत्वादावतिव्याप्तिरेवस्यात् यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियो
गिव्यधिकरणाभावोमीलोनस्यात् प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्यघटत्वादेः सर्वस्यैवत
द्रूपान्यत्वविशिष्टसत्तात्वावच्छिन्नसंबंधिनिष्ठाभावप्रतियोगितावच्छेदकत्वेनतादृशसत्तात्वस्यपारिभाषिकानवच्छेदकत्वा
दितिप्राहुः इदंत्ववधातव्यं अत्रापिलक्षणेहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्संबंधेनयादृशयादृशधर्मविशिष्ट
संबंधिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्तत्संबंधेनतादृशतादृशधर्मावच्छिन्नविशेष्यतान्यसाध्यतावच्छेदकताघटक
संबंधावच्छिन्नविशेष्यतावच्छेदकत्वमेवसाध्यतावच्छेदकेद्रष्टव्यं नातः प्रागुक्तदोषाणामवकाशोनवामहानसीयवन्हित्वा
देः पारिभाषिकावच्छेदकतयातदन्यत्वस्यवन्हित्वादावसत्वेपिवन्हिमान्धूमादित्यादावव्याप्तिः विशिष्टवन्हित्वाभिन्नस्यापिव
न्हित्वस्यविशिष्टवन्हित्वावच्छिन्नविशेष्यतान्यविशेष्यतावच्छेदकत्वानपायात् ननुघटवान्महालत्वादित्यादावव्याप्तिः ग
गनत्वादिविशिष्टस्यकालिकादिसंबंधेनसंबंध्यप्रसिद्ध्या पारिभाषिकावच्छेदकत्वासंभवात् नचसाध्यतावच्छेदकसंबंधसा
मान्येयादृशधर्मावच्छिन्नाभाववदनुयोगिकत्वयद्धर्मविशिष्टप्रतियोगिकत्वोभयाभावस्तत्वं विवक्षितं तच्चगगनत्वादौसुलभ
मितिवाच्यं तथासतिप्रमेयधूमवान्वन्हेरित्यादावतिव्याप्तेरित्युक्तत्वात् धूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वापे

स्यप्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति चेदत्र वदं-
ति स्वविशिष्टप्रतियोगित्वानि विशिष्योपादाय साध्यतावच्छेदकसंबंधसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेद-
कीभूतनत्तद्धर्मावच्छिन्नाभाववदनुयोगिकत्वस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य च द्वयोर्व्यतिरेकः स धर्मः
पारिभाषिकावच्छेदकप्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेपि तत्त-
द्धूमप्रतियोगिकत्वघटितोभयाभावकूटमादायैव नातिव्याप्तिः कालो घटवान् महाकालत्वादित्यादौ च गगनत्वमेव तादृशाव-
च्छेदकमादाय लक्षणसमन्वय इति वस्तुतस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मः प्रतियोगिव्यधिकरणतदव-
च्छिन्नाभाववत्तावच्छेदेन साध्यताघटकसंबंधावच्छिन्नसंबंधितानिरूपितविशेषणतया यद्धर्मविशिष्टसंबंधित्वसामान्या-
भाववत्त्वे यद्धर्मे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोग्यनधिकरणतावच्छेदकत्वसामान्यस्य प्रकृ-
तसाध्याधिकरणतावच्छेदकत्वनिरूपितस्वरूपसंबंधेनाभाववत्त्वे वा स्वविशिष्टसंबंधीत्यादिनिरुक्तेस्तात्पर्यात् गगनत्वा-
दौ सहजातः पारिभाषिकावच्छेदकत्वं सुलभमिति केचित्तु तादात्म्यसाध्यतावच्छेदकान्यतरसंबंधेन यः स्वविशिष्टसंबंधीत-
न्निष्ठो यस्तदन्यतरसंबंधेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्त्वमुक्तलक्षणार्थः तथा च तादृशा-
न्यतरतादात्म्यसंबंधेन गगनत्वविशिष्टसंबंधिन्याकाशे वर्तमानो गगनाभावो नैतादृशान्यतरसंबंधेन प्रतियोगिव्यधिकरण

त्तस्य तादात्म्येन प्रतियोगिसमानाधिकरणत्वात् किंतु घटाभाव एव तथेति तत्प्रतियोगितानवच्छेदकमेव हेतुमन्निष्ठाभावप्र
तियोगितावच्छेदकीभूतं गगनत्वमिति तमादायैव कालो घटवान्महाकालत्वादित्यादौ लक्षणसंगतिः न चैवं धूमगगनाभावा
न्यतरस्य संयोगेन साध्यत्वे वह्न्यादावतिव्याप्तिः तादृशान्यतरत्वापेक्षया लघुत्वेन धूमत्वस्यैव हेतुसमानाधिकरणाभावप्रतियो
गितावच्छेदकत्वात्तस्य च संयोगतादात्म्यान्यतरसंबंधेन यत्तदन्यतरत्वविशिष्टस्य संबंधी गगनाभावस्तन्निष्ठस्य तादात्म्यसं
योगान्यतरसंबंधेन प्रतियोगिव्यधिकरणस्य धूमाभावस्य प्रतियोगितावच्छेदकतया धूमगगनाभावान्यतरत्वस्य पारिभाषि
कावच्छेदकत्वविरहादिति वाच्यं धूमगगनाभावान्यतरत्वस्याप्यखंडस्य धूमत्वतुल्यतया तस्यैव हेतुमन्निष्ठाभावप्रतियोगिता
वच्छेदकस्य स्वविशिष्टसंबंधिनिष्ठतादृशसंबंधावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतया पारिभाषिका
वच्छेदकत्वेनातिव्याप्तिविरहादिति प्राहुस्तन्नेदंरूपवान्घटत्वादित्यादावव्याप्तिप्रसंगात् हेतुसमानाधिकरणाभावप्रतियोगि
तावच्छेदकं यद्रूपत्वद्रव्यान्यतरत्वं तस्य तादृशसंबंधेन रूपत्वविशिष्टसंबंधिनिष्ठतादृशसंबंधावच्छिन्नप्रतियोगिव्यधिकर
णाभावप्रतियोगितानवच्छेदकत्वेन रूपत्वस्य पारिभाषिकावच्छेदकत्वात् तथाहि तादात्म्यसमवायान्यतरसंबंधेन यद्रूपवि
शिष्टस्य संबंधि रूपं पृथिव्यादिकं वा तत्र तादात्म्यसमवायान्यतरसंबंधेन प्रतियोगिव्यधिकरणो न रूपत्वद्रव्यान्यतरत्वाव
च्छिन्नाभावः समवायेन रूपे रूपत्वाख्यप्रतियोगिनस्तादात्म्येन च पृथिव्यादौ द्रव्यात्मकप्रतियोगिनः संबद्धत्वात् किंतु रूप

त्वविशिष्टस्यतथाविधसंबंधिनिष्ठो यः पटाद्यभाव एव तादृशप्रतियोगिव्यधिकरण इति रूपत्वद्रव्यान्यतरत्वेन प्रतियोगिता
नवच्छेदकत्वध्रौव्यात् नचहेतुसमानाधिकरणस्याभावस्यापितादृशान्यतरसंबंधेनप्रतियोगिवैयधिकरण्यस्य वक्तव्यत्वा
न्नैषदोषः तथासतिसमवायेनघटस्यप्रमेयस्यवासाध्यत्वेतादात्म्येनहेतौघटत्वेप्रमेयेवातिप्रसंगादितिदिक् अनएवेति व
स्तुतस्त्वित्यादिकल्पस्यादृतत्वादेवेत्यर्थः यथाश्रुतस्यावच्छेदकानतिरिक्तवृत्तित्वस्यादरेतुसत्तावान्जातेरित्यादावव्याप्तिः
स्यादेवेतिभावः जातिमन्निष्ठाभावप्रतियोगितायांसत्तात्वान्यूनवृत्तित्वविशिष्टसत्तात्वावच्छेद्यत्वसमवायसंबंधावच्छेद्यत्वोभ
यसत्वादवच्छेद्यताघटितलक्षणस्यापिप्रागुक्तस्यापिसत्तावान्जातेरित्यत्राव्याप्तिरतस्तदपिपरिष्करोति एवमितिस्वंसाध्यता
वच्छेदकं अत्रस्ववैशिष्ट्यंसाध्यतावच्छेदकताघटकसम्बंधेनैववाच्यंतेनधूमत्वादीनांकालिकादिसंबधेनधूमत्वादिविशि
ष्टस्यघटादेः संयोगिनिवर्तमानस्याभावस्यप्रतियोगितावच्छेदकत्वेपिधूमवान्वन्हेरित्यादौनातिव्याप्तिः स्वविशिष्टस्यसंबंधि
त्वंसाध्यतावच्छेदकसंबंधेनग्राह्यंतेनधूमत्वाद्यवच्छिन्नप्रतियोगितायांकालिकादिसंबंधेनयद्धूमत्वविशिष्टस्यसम्बंधितन्नि
ष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वविरहेपिधूमवान्वन्हेरित्यादौनाव्याप्तिः नचसामान्यतोधूमसंबंधिनिसंयोगेन
सर्वस्यैवाभावसत्वाद्धूमवन्निष्ठसंबंधावच्छिन्नप्रतियोगितानवच्छेदकाप्रसिद्ध्याकथमितिव्याप्तिरितिवाच्यंगोत्वत्वघटाभा
वत्वादेरेवतत्प्रसिद्धेः संयोगसंबंधावच्छिन्नगोत्वाद्यभावप्रतियोगितायालाघवेनगवेतरासमवेतादिभिरेवावच्छेदात् नचै

वमपिनदवच्छेद्यत्वाप्रसिद्ध्यैवनातिव्याप्तिःगोत्वादिभेदप्रतियोगितायांनत्तौलभ्यात् नहिसापिगवेतरासमवेतत्वमात्रा
वच्छिन्नागोरूपादौगोत्वभेदासत्वप्रसंगात् यदिगोत्वत्वावच्छेद्यत्वसंबन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावाप्रसिद्ध्यैव
नातिव्याप्तिःगवेतरासमवेतत्वाद्यवच्छेद्यत्वमात्रघटिततादृशोभयत्वस्यैवलघुत्वेनप्रतियोगितावच्छेदकत्वादितिविभा
व्यतेतदोक्तरीत्यावन्हिमान्धूमादित्यादावव्याप्तिवारणार्थमेवसाध्यतावच्छेदकसंबंधेनस्वविशिष्टस्यसंबंधित्वंनिवेश्यंइ
त्यंचनिरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्येएवसाध्यवन्निष्ठाभावीयसंयोगसंबंधावच्छिन्नप्र
तियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छेद्यत्वसंयोगसंबन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावसत्वाद्धूमवान्वन्हेरित्यत्रै
वातिव्याप्तिःगुरुतयोक्तक्रमेणतादृशोभयत्वावच्छिन्नाभावाप्रसिद्धावन्हिमान्धूमादित्यादावव्याप्तिर्वास्यादतःप्रतियोग्यसं
बन्धत्वेनापिस्वविशिष्टसंबंधीविशेषणीः तदर्थेश्चप्रतियोगितावच्छेदकसम्बन्धेनप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धि
त्वेनेनसम्बन्धसामान्येनयत्प्रतियोगितावच्छेदकावच्छिन्नासंबंधीवन्हित्वविशिष्टसम्बन्धीपर्वतादिस्तन्निष्ठस्यप्रलयोत्प
न्नकर्मान्यत्वाभावस्यप्रतियोगितानवच्छेदकंयद्घटत्वादिकंतदवच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वयोश्चसाधनवन्निष्ठा
भावप्रतियोगितायांसत्वेपिवन्हिमान्धूमादित्यादौनाव्याप्तिःनवाप्रतियोग्यसम्बन्धिसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेद
कीभूतविशिष्टसत्तात्वाद्यवच्छेद्यत्वसमवायसम्बन्धावच्छेद्यत्वयोःसाधनवन्निष्ठाभावप्रतियोगितायांसत्वेपितावान् जातेरित्या

जा॰ श्री दावव्याप्तिप्रसंगः। प्रतियोगितावच्छेदकसंबंधेनप्रतियोग्यसम्बन्धीयःसाध्यतावच्छेदकावच्छिन्नसम्बन्धितन्निष्ठाभाव
१२ प्रतियोगितानवच्छेदकंनघटाद्यभाववत्त्वगोत्वत्वादिकंतस्यापिसाध्यवन्निष्ठतादृशभेदादिप्रतियोगितावच्छेदकत्वात् किंतु
लघुसमनियतंगुरुप्रमेयधूमत्वादिकमेवतथाचतदवच्छेद्यत्वाप्रसिद्ध्यावन्हिमान्धूमादित्यादावसंभवोव्याप्तिर्वेन्यतःसाध्यव
न्निष्ठाभावप्रतियोगित्वमपिसाध्यतावच्छेदकसम्बन्धावच्छिन्नंग्राह्यंतेनसंयोगादिसम्बंधावच्छिन्नप्रतियोगितानवच्छेदकी
भूतगोत्वत्वाद्यवच्छेद्यत्वप्रसिद्ध्यैवलक्षणसंभवःवस्तुतःप्रागुक्तयुक्त्यात्रापिसाध्यतावच्छेदकसम्बन्धेनप्रतियोग्यसम्बन्धि—
साध्यतावच्छेदकावच्छिन्नसंबन्धिनोवक्तव्यंननुप्रतियोगितापितादृशसम्बन्धावच्छिन्नाग्राह्यानन्वेवमपिसाध्यतावच्छेदक
सम्बन्धेनप्रतियोग्यसम्बन्धिसाध्यतावच्छेदकावच्छिन्नसम्बन्धिनिष्ठाभावाप्रसिद्ध्याविभुत्वविशिष्टघटवान्महाकालत्वादि
त्यादावव्याप्तिःमहाकालान्यत्वघटत्वावच्छिन्नाभावस्यैवतादृशस्यकथंचिन्महाकालेप्रसिद्ध्यातत्राव्याप्तिवारणेपिनद्वन्हीय
संयोगसम्बन्धेनवन्हेःसाध्यतायांसद्धेतावव्याप्तिःतत्संबन्धेनयत्प्रतियोगिसम्बन्धितदन्यत्वस्यतद्वन्हिमत्त्वभावात् महाकाल
निरूपितविशेषणतयाघटादेःसाध्यतायांमहाकालत्वहेतावुक्तक्रमेणाप्यव्याप्तिवारणासंभवाच्चतेनसंबन्धेनयःप्रतियोगि
संबन्धीतदन्यत्वस्यमहाकालेविरहात् नचसाध्यतावच्छेदकसम्बन्धसामान्येसाध्यतावच्छेदकावच्छिन्नसम्बन्धियत्किंचिद्वृ रामः
त्त्यनुयोगिकत्वयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयाभाववत्तादृशप्रतियोगितानवच्छेदकावच्छिन्नत्वं १२

निवेश्यमतोगगनाभाववद्वारैवप्रसिद्धिरितिवाच्यंस्वरूपसंबन्धेनगगनादेर्वृत्तिमत्वपक्ष एवप्रतियोगिताधर्मिकोभयाभावग
र्भनिरुक्त्यादरात्। तत्रगगनाभावमादायप्रसिद्ध्यसंभवात् कालिकविशेषतायांगगनत्वावच्छिन्नप्रतियोगिकत्वसाध्यतन्महाका
लानुयोगिकत्वयोःसत्वादिति चेदेतदस्वरसेनैवप्रतियोगितयोरित्यादिनाप्रतियोगिवैयधिकरण्यमुपेक्ष्यलक्षणांतरंवक्ष्यतइत्ये
के परेतुनिरुक्तप्रतियोग्यसंबंधिप्रकृतसाध्यवन्निष्ठाभावप्रतियोगितायांयद्यद्धर्मावच्छेद्यत्वसाध्यताघटकसंबंधावच्छिन्न
त्वोभयाभावःप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणप्रकृतहेतुमन्निष्ठाभावप्रतियोगितासामान्येपितादृशोभया
भावकूटवत्वंविवक्षितंअस्ति चसमवायाद्यवच्छिन्नघटाद्यभावप्रतियोगितायांयत्कालिकसंबंधावच्छिन्नत्वघटत्वावच्छिन्न
त्वोभयाभाववत्वंतदेवप्रतियोग्यनधिकरणमहाकालनिष्ठाभावप्रतियोगितासामान्येपीतिघटवान्महाकालत्वादित्यादौनाव्या
प्तिःपद्यदितिवीप्सादरात्निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये एवगुणत्वावच्छेद्यत्वसंयोगस-
म्बन्धावच्छेद्यत्वोभयाभावसत्वेपिधूमवान्वन्हेरित्यादौनातिव्याप्तिःधूमत्वावच्छेद्यत्वसंयोगसम्बन्धावच्छेद्यत्वोभयाभाव
स्यापितादृशत्वेनतस्यैवप्रतियोग्यनधिकरणवन्हिमन्निष्ठाभावप्रतियोगितासामान्येविरहात् संयोगसंबंधावच्छिन्नधूमाभा
वप्रतियोगितायांतदसत्वादित्याहुःनतुस्वविशिष्टसंबंधिनिष्ठाभावप्रतियोगितानवच्छेदकेत्यत्रानवच्छेदकत्वेन
तादृशावच्छेदकप्रतियोगिकभेदमात्रंधर्ममात्रस्यैवतादृशयत्किंचिदवच्छेदकभिन्नत्वेन

जा·अ व्याप्तिलक्षणासंभवप्रसंगात् किंतु तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताको भेदस्तथा चावच्छेदकत्वगर्भो
१३ यानिरुक्तेः प्रमेयधूमवान्वन्हेरित्यादावतिव्याप्तिः अवच्छेद्यत्वगर्भो यास्तु प्रमेयवन्हिमान्धूमादित्यादावव्याप्तिः प्रमेयवन्हि
त्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वेपि प्रतियोगिताया लाघवेन वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वे
नैवावच्छेदादत आह। प्रतियोगिताश्चेति। तादृशावच्छेदकनिष्ठप्रतियोगिताव्यक्तयो विशेष्य तत्तदवच्छेदकत्वावच्छिन्नत्वे
न प्रवेशनीया न त्वनुगततादृशावच्छेदकत्वावच्छिन्नत्वेन यतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेर्दुर्वचत्वं स्यादित्यर्थः। स्वविशि
ष्टसम्बंधिनिष्ठाभावीयप्रतियोगिताविशेष्योपादाय तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटवत्त्वं निवेशनीयमिति तत्व
व्याख्यानं तत्तत्प्रतियोगिताविशेषितावच्छेदकत्वव्यक्तीनां वास्तविकतत्तदवच्छेदकत्वव्यक्तीरपेक्ष्य गुरुत्वेन तत्तत्प्रतियोगि
तानिरूपितावच्छेदकत्वावच्छिन्नभेदानामप्यप्रसिद्ध्या दुर्वचत्वतादवस्थ्यात् यदि च सममनियतनानाधर्मावच्छिन्नप्रति
योगित्वस्य भेदे मानाभावस्तदा तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटस्य प्रवेशेपि न क्षतिः तत्तत्प्रतियोगितावच्छे
दकत्वस्य तत्तदवच्छेदकत्वसमनैयत्याभावेन गुरुत्वस्याकिंचित्करत्वादिति ध्येयं सम्बन्धभेदमिति इदं च प्रागेव निरुक्तव्या
ख्यायां प्रपंचितं ननु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायाः संयोगत्वावच्छेद्यत्वेपि संयोगत्वस्य स्वविशि राम:
ष्टसम्बंधिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाभावात् संयोगीसत्वादित्यत्रातिव्याप्तिरत आह। भावश्चेति। निरुक्तित्रये १३

विशेषः तथाच निरुक्तप्रतियोग्यनधिकरणस्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं संयोगत्वेप्यस्तमिति
हेतुमन्निष्ठाभावप्रतियोगितायाः तदवच्छेद्यत्वाभावादेवनातिव्याप्तिरिति भावः नन्वेवं गोमान्महाकालत्वादित्यत्राव्याप्तिः
गोत्वविशिष्टसम्बन्धिनिष्ठस्याभावमात्रस्यैव साध्यताघटककालिकसम्बन्धेन प्रतियोगिसमानाधिकरणतयास्वविशिष्ट
सम्बन्धिनिष्ठप्रतियोग्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाप्रसिद्धेरत आह। कालिकेति तथाचस्वावच्छिन्नाधि
करणसाध्यवत् खण्डकालनिष्ठाभावप्रतियोगितावच्छेदकतयैव तत्तद्व्यक्तित्वेन निरुक्तावच्छेदकत्वं सुलभमिति भावः॥
ननु हेतुमन्निष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकमात्रस्यैव घटत्वादिविशिष्टसम्बन्धिनिष्ठाभावीयसं
योगसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात् पारिभाषिकावच्छेदकाप्रसिद्ध्या वन्हिमान्धूमादित्यादावव्याप्तिवार
कं द्वितीयनिरुक्तावभावे प्रतियोगिवैयधिकरण्यं प्रवेश्यतामवच्छेद्यत्वघटिततृतीयनिरुक्तावपि हेतुमन्निष्ठाभावप्रतियो
गितासामान्ये एव धूमत्वविशिष्टसंबन्धिनिष्ठाभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वाद्यवच्छे
द्यत्वाभावात् धूमवान्वन्हेरित्यादावव्याप्तिवारणार्थमभावे तद्विशेषणं दीयतां प्रथमनिरुक्तौ तु प्रतियोगिवैयधिकरण्यमभ
वविशेषणं किमर्थमित्याशङ्क्य तेन न चेति वाच्यमिति परेणान्वयः संयोगी द्रव्यत्वादित्यादावव्याप्तिवारणं मौलस्य फलं अन्य
थोपपादयति संयोगत्वावच्छिन्नेति वृत्तेरिति अव्याप्यनवकाशादित्यग्रेन्वयः संयोगिसत्त्वादित्यादावतिव्याप्तिवारणमिद

जा॰अ॰ मीयस्य फलमन्यथाकुरुते गुणादीति द्रव्यत्वत्वं द्रव्यान्यासमवेतत्वविशिष्टसकलद्रव्यसमवेतत्वं तच्च न समवायसंब
१४ न्धेनाभाववत्स्यप्रतियोगितावच्छेदकलाघवेन द्रव्यान्यासमवेतत्वस्यैव तत्त्वादित्यतस्तथैवाह। द्रव्यमात्रेति द्रव्यान्यास
मवेत इत्यर्थः। अवृत्तेरिति। अतिव्याप्त्यनवकाशादिति योजना धूमवानिति संयोगेन द्रव्यानामव्याप्यवृत्तितया धूमत्वाव
च्छिन्नाभाववत्त्यपि धूमत्वादिविशिष्टस्य सत्त्वादिति भावः ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्योगोलकासंयु
क्तत्वं धूमत्वविशिष्टस्य तदवच्छिन्नाभाववद्वृत्तित्वादेव नातिव्याप्तिरत आह। नहीति इत्थं चावच्छेदकनिरुक्तौ प्रतियो
गिवैयधिकरण्यप्रवेशो मूलोक्तहेतुसमानाधिकरणाभावेपि न दवध्यमन्यथा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक
भूतसंयोगत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यावच्छिन्नस्याधिकरणे गुणादौ संयोगत्वादिविशिष्टस्यावृत्तेः
संयोगी द्रव्यत्वादित्यादावव्याप्तिरिति भावः लाघवमभिप्रेत्याह। प्रतियोगितयोरिति मौलइदमीयप्रतियोगितयोरित्यर्थः तथा
च हेतुमन्निष्ठाभावीययद्यत्संबंधावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किंचिद्धर्मावच्छिन्नतत्तत्सम्बन्धावच्छिन्न
प्रतियोगिताकाभाववदसंभवद्वाक्यविशिष्टसामान्यकत्वं प्रथमस्य तु स्वविशिष्टसम्बंधिनिष्ठाभावीययत्सम्बन्धाव
च्छिन्नप्रतियोगितानवच्छेदकीभूतहेतुसमानाधिकरणाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्व गमः
मर्थः तत्संबंधावच्छिन्नपर्य्यवसन्नस्यैकसम्बन्धावच्छिन्नत्वस्याननुगमाद्विशेषणतादिविशेषावच्छिन्नत्वप्रवेशावश्य १४

कत्वेनसम्बन्धांतरप्रवेशेगौरवात्तदपेक्षयालाघवाच्चाह। विशेषणतेति अभावीयविशेषणतायालक्षणघटकत्वम
भिप्रेत्याहतदन्यत्वेति प्रमाविषयतीयविशेषणतायास्तथात्वमभिप्रेत्याह। तदन्यत्वप्रकारेति। साध्यवत्वस्यावश्यो
पस्थितिकतयातदघटितधर्मस्योपस्थितिर्लाघवात्तमादायैवातिव्याप्तिवारणंसुघटमित्याशयेनाह। साध्यवत्वेतिन
न्वेवंविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्येयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकीभू
तधर्मावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावःसाध्यतावच्छेदकसम्बन्धेनतद्धर्मावच्छिन्नोहे
तुर्व्यापकइत्युक्तक्रमेणतृतीयार्थःफलितःतथाचविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्यएवसाध्यतावच्छे
दकीभूतसंयोगसम्बन्धावच्छिन्नत्वाभावेनतादृशोभयाभावसत्वात् धूमवान्वन्हेरित्यादावतिव्याप्तिःनचहेतुमन्निष्ठा
भावप्रतियोगितायांविशेषणताविशेषावच्छिन्नत्वंनदेयमितिवाच्यं वन्हिमत्वप्रकारकप्रमाविशेष्यत्वादीनांसंयोगादि
संबंधेनाभावस्यहेतुमतिसत्वेनवन्हिमान्धूमादित्यादौसर्वत्रैवाव्याप्तिप्रसंगादित्यतःसाध्यतावच्छेदकसम्बन्धावच्छि
न्नत्वांशपरित्यागेनतृतीयस्यार्थेनिःकृष्यदर्शयति तथाचेत्यादिना। यद्धर्मेति। यत्पदंसाध्यतावच्छेदकपरं। तत्सम्बन्धा
वच्छिन्नेति। विशेषणताविशेषावच्छिन्नेत्यर्थःअत्रप्रतिपदव्यावृत्तिरुक्तदिशाबोध्यानचनिरुक्तप्रतियोगितासामान्ये
यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितावच्छेदकावच्छेद्यत्वंसाधनेतद्धर्मावच्छि

जा॰ अ॰ न्नसामानाधिकरण्यमेवलाघवाद्व्याप्तिरुचितेनेतिवाच्यं सामान्यपदस्यव्यापकतावाचित्वेननिरुक्तप्रतियोगितात्वव्या
१५ पकावच्छेदकंयद्धर्मावच्छिन्नवन्हिनिष्ठविशेषणताविशेषावच्छिन्नाभावप्रतियोगितावच्छेदकावच्छेद्यतात्वमित्यर्थे
पर्य्यवसानेनप्रमेयधूमवान्वन्हेरित्यादावव्याप्त्यापत्तेःप्रमेयधूमवन्हिनिष्ठाभावप्रतियोगितावच्छेदकावच्छेद्यत्वस्यगु
रुधर्मतयावन्हिवन्हिनिष्ठाभावप्रतियोगितात्ववन्हिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेननादृशप्रतियोगितात्वव्यापकता
वच्छेदकत्वात्। अस्माकंतुप्रमेयधूमत्वावच्छिन्नवन्हिनिष्ठाभावप्रतियोगितानवच्छेदकंयदयःपिण्डभेदत्वंतदवच्छेद्य
त्वाभावस्यैवसाधनवन्हिनिष्ठाभावप्रतियोगितात्वव्यापकत्वाभावेनातिव्याप्त्यभावात् एतेनसाधनसमानाधिकरणाभा
वसामान्येयद्धर्मावच्छिन्नसमानाधिकरणाभावत्वंतादृशाभावप्रतियोगितासामान्येवायद्धर्मावच्छिन्नसमानाधिकर
णाभावप्रतियोगितात्वंसाधनेतद्धर्मावच्छिन्नसामानाधिकरण्यंव्याप्तिर्लाघवादित्यपिप्रत्युक्तमितिध्येयंसाध्यसाधन
भेदेनव्याप्तेर्भिन्नतयाप्रमेयवन्हित्वादिनागुरुधर्मेणसाध्यतास्थलेएवसाध्यतावच्छेदकावच्छेद्यत्वाप्रसिद्ध्याप्रोक्तक्र
मेणव्याप्तिर्वाच्यावन्हिमान्धूमादित्यादौतुलघुक्रमेणसाध्यतास्थलेहेतुमन्निष्ठाभावप्रतियोगितासामान्येयत्संबंधाव
च्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावघटितैवसावक्तव्याशब्दैक्यस्याकिंचित्करत्वादित्याह। यत्रसद्धेतुविशेषइति न रामः
व्यमतमुपन्यस्यतिगौरवेति यादृशप्रतीत्यागुरोरवच्छेदकत्वप्रसिद्धिःतादृशबुद्धौगौरवज्ञानस्ययदिविरोधित्वंस्यात्तदा १५

मानाभावाद्गुरोरवच्छेदकत्वं नस्यात् नचैतदस्तीतिभावः यद्यपिगौरवज्ञानमात्रंनावच्छेदकत्वधीप्रतिबंधकंविशिष्टसत्तात्वस्यद्रव्यत्वत्वापेक्षयागुरुत्वग्रहेपिविशिष्टसत्तानास्तीतिप्रतीत्यातदवच्छेदकत्वग्रहस्यप्राचीनैःस्वीकृतत्वात् नचतद्धर्मसमानाधिकरणधर्मधर्मिकस्तदपेक्षयालघुत्वग्रहस्तद्धर्मस्यावच्छेदकत्वधीप्रतिबंधकःनीलधूमत्वसमानाधिकरणधूमत्वेनतदपेक्षयालघुत्वग्रहेपिनीलधूमोनास्तीतिप्रतीत्यानीलधूमत्वस्यावच्छेदकत्वावगाहनस्यसर्वसंमतत्वात् नापितद्धर्मसमनियतधर्मधर्मिकएवतद्धर्मापेक्षयालघुत्वग्रहस्तद्धर्मस्यावच्छेदकत्वधीप्रतिबंधकइतिसांप्रतं घटज्ञानत्वापेक्षयालघुनोपिज्ञानत्वस्यघटज्ञानत्वसमनियतत्वाभावाद्गुरुणोपिघटज्ञानत्वस्यसंयोगसम्बन्धावच्छिन्नघटज्ञानाभावस्यप्रतियोगितानवच्छेदकत्वापत्तेः तथापिसंसर्गमर्यादयाप्रतियोगितावच्छेदकत्वग्रहं प्रतितादात्म्येनकंबुग्रीवादिमत्त्वरूपगुरुधर्मःप्रतिबंधकइतिनकदाचिदपितेष्ववच्छेदकत्वग्रहइतिप्राचांतात्पर्यंवस्तुतःसंसर्गमर्यादयाकंबुग्रीवादिमत्त्वावच्छेद्यप्रतियोगिताकत्वावगाहिज्ञानसमानविशेष्यत्वप्रत्यासत्त्याकंबुग्रीवादिमत्त्वापेक्षयालघुधर्मावच्छिन्नप्रतियोगिताकत्वज्ञानत्वेनैवप्रतिबंधकत्वंप्राचामभिप्रेतं तथाचजलादौनिर्वह्नित्वस्याग्रहदशायांवन्हिभ्रमस्यैवतदुत्क्रमेणगौरवस्याग्रहदशायामपिकंबुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वेनतादृशग्रहाजायतएव अन्यथाकंबुग्रीवादिमान्नास्तीतिधियोःबाधनिश्चयविषयाविशिष्टधीविरोधित्वानुपपत्तेःकंबुग्रीवादिमत्त्वावच्छिन्न।

स्यविशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकत्वेनाभावनिश्चयस्य विरोधित्वादिति ध्येयम्। प्रतीतेर्वलमवच्छेदकत्वाव
गाहित्वं गुरुरपीति तथा च स्वरूपावच्छेदकत्वघटितं मूलोक्तं यथाश्रुतमेव लक्षणं सम्यक् प्रमेयधूमत्वादेस्तादृशा
वच्छेदकत्वेन व्यभिचारिण्यतिव्याप्तिविरहादिति कृतं पारिभाषिकावच्छेदकत्वनिर्वचनेनेति भावः। ननूक्तज्ञानस्य विरो
धित्वात्तादृशप्रतीत्यावच्छेदकत्वं नावगाह्यते परं तु कंबुग्रीवादिमन्निष्ठप्रतियोगिताकाभावमात्रमित्याशंक्य निषेधयति
न चेति। अवलम्बनं विषयः तथाविधेति। कंबुग्रीवादिमत्त्वाश्रयेत्यर्थः तादृशप्रतीतेः कंबुग्रीवादिमान्नास्तीत्याकारकप्र
तीतेः अनुदयादिति तथा च त्वन्मते कंबुग्रीवादिमदन्तरस्याभावमादाय तदुदयप्रसंग इति भावः ननु तथाविधयत्किंचि
द्व्यक्तिनिर्णये स एव प्रतिबंधकः अन्यथा विशेषादर्शनदशायां न वापि कंबुग्रीवादिमान्नास्तीति प्रतीतिर्जायत एव तन्नेत्य
त आह। अत एवेति गुरुधर्मस्यावच्छेदकत्वादेवेत्यर्थः न प्रमाणमिति कंबुग्रीवादिमत्त्वावच्छिन्नाभावप्रकारत्वेन तादृ
शान्वयबोधो भ्रम इति तादृशशब्दस्य भ्रमजनकत्वेनाप्रमाणत्वं त्वन्मते च कंबुग्रीवादिमत्प्रतियोगिकाभावशून्यताया
घटवत्यभावात् तादृशप्रतीतेर्न भ्रमत्वमिति तादृशशब्दोऽप्यप्रमाणं न स्यादित्यर्थः ननु भ्रमत्वस्य प्रकारभेदेन भिन्नत्वा
त्सर्वत्र तदभाववद्विशेष्यकत्वं न भ्रमत्वघटकं समवायेन गगनादिभ्रमेण तन्निवेशवैयर्थ्यात्। तथा च तत्रैव प्रकृतेऽपि कं
बुग्रीवादिमत्प्रतियोगिकाभावप्रकारतामात्रेण तादृशान्वयबोधो भ्रमो भविष्यतीत्याह प्रमाणं चेति। तथा च तत्रापि कंबु

ग्रीवादिमान्नास्तीति शब्दः प्रमाणं न स्यादित्यकामेनापि प्रकृते भ्रमत्वं न दभाववद्विशेष्यकत्वघटितं वाऽप्रमितिभावः धू
मो न वह्निव्याप्य इत्यादेर्वह्निव्याप्याभावकूटार्थकत्ववत् कंबुग्रीवादिमान्नास्तीत्यादावपि कंबुग्रीवादिमत्प्रतियोगिका
भावकूटबोधकत्वादेव तादृशशब्दस्याप्रामाण्याद्युपपत्तिरन्यथा धूमालोकसाधारणानुगतव्याप्तेरभावादालोकगर्भव्या
प्तिनावच्छिन्नाभावस्य धूमे सत्त्वात्तमादाय धूमो न वह्निव्याप्य इति वाक्यस्याप्रामाण्यापत्तेः एवं गुरुधर्मस्यानवच्छेदक
तया तादृशधर्मावच्छिन्नविशिष्टबुद्धिं प्रति तादृशधर्माश्रयप्रतियोगिकाभावकूटवत्तानिश्चयत्वेनैवानन्यगत्या विरो
धित्वकल्पनात् कंबुग्रीवादिमान्नास्तीति दशायां कंबुग्रीवादिमदस्तीति ज्ञानविरोधोपि घटत इति प्राचीनमतनिर्भ
रः अतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेरपि दुर्वचत्वमित्याह न चेदेवमिति लघिति द्रव्यं गुणाद्विशिष्टसत्त्वाद्वा इत्या
दौ द्रव्यत्वसमनियतानां गुणत्वविशिष्टसत्तादीनामित्यर्थः अव्याप्तिमुपपादयति। गुणादीति। ननु हेतुमन्निष्ठाभाव
प्रतियोगितावच्छेदकत्वव्यक्तीनां तत्तद्व्यक्तित्वेनाभावकूटवत्त्वमेव साध्यतावच्छेदकांशे निवेश्यमतो नोक्तदोषा
नत्राह। तत्तदिति यद्यपि गुरोरवच्छेदकत्वपक्षेपि स्वस्वप्रतियोगिव्यधिकरणाभावघटितव्याप्तेस्तत्तत्प्रतियोगिताय

जा॰ अ॰ र्मत्वेन दुर्ज्ञेयत्वं। तथापि व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तेरभिप्रायेणेदं तत्र प्रतियोगिवैयधिकरण्याप्रवेशात् नि
१७ रवच्छिन्नहेत्वधिकरणवृत्तिकाभावप्रतियोगितानवच्छेदकत्वमेव सर्वत्र व्याप्तिप्रविष्टमित्याशयेनेदमिति तु
परमार्थः तेनाव्याप्यवृत्तिसाध्यकस्थलेपि व्याप्तेर्न ज्ञेयत्वमिति ध्येयं। द्रव्यत्वत्वेति द्रव्यनिष्ठाभावप्रतियोगिताव
च्छेदकत्वापेक्षया द्रव्यत्वत्वावच्छिन्नत्वनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाभावप्रसिद्धे
रिति भावः। ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतयत्किंचिद्धर्मावच्छिन्नाभाववत्संबंधस्वविशिष्टसामा
न्यकभिन्नत्वं स्वविशिष्टसंबंधिनिष्ठाभावीयप्रतियोगितावच्छेदकीभूततादृशधर्मावच्छिन्नत्वं यत्साध्यतावच्छेदकं रामः
तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र वा दुर्ज्ञेयत्वाभावात्तथैव व्याप्तिर्वाच्येत्यत आह उपदर्शितेति स्वत्वादि १७

त्यादिनाव्यापकतापर्यवसन्नत्वस्य तत्रावच्छेदकत्वाभावगर्भसामान्यत्वस्योपग्रहः अत एव गुरोरवच्छेदक
त्वादेवसंगच्छत इति अन्यथाग्राह्यगंधत्वापेक्षयागुरुत्वेन घ्राणग्राह्यगुणत्वावच्छिन्नाभावाप्रसिद्ध्यातद्वृत्तिक
त्वंव्यभिचरितत्वं तत्र न स्यादितिभावः यद्यपिसाध्यव्यापकतावच्छेदकधर्मावच्छिन्नाभाववद्वृत्तित्वमेवव्यभिचारः
सचग्राह्यगंधत्वावच्छिन्नाभाववद्वृत्तित्वेनैवतत्रसुलभ इत्यपिशक्यतेवक्तुंतथापितद्बुद्धेः प्रकृतसाध्यानुमित्यवि
रोधितयाहेत्वाभासतानस्यात् यद्विषयकत्वेनयादृशानुमानविरोधितत्वंतस्यैवतत्रतथात्वादितिभावः ॥ ॐ ॥ इति
श्रीजगदीशविरचिताऽवच्छेदकत्वनिरुक्तिः समाप्तिमगमत् ॥ श्रीरामचंद्रजी सुभ ॥ मस्तु ॥ ॐ ॥ ॐ ॥

# जागदीश्यवच्छेदकत्वनिरुक्तिः

श्रीकाशीविश्वनाथपुरीमें ढुंढिराजगणेशके पास दाऊजी अग्निहोत्री के सिद्धविनायक यंत्रमें जागदीश्यवच्छेदकत्वनिरुक्तिः छ[illegible]ा जिसे लेना हो वह उसे ढुंढिराजगणेशके पास दाऊजी अग्निहोत्री[illegible]दुकानपर मिलैगा लि॰ रामदास छापनेवाला बचनू संवत १९४७

पहिलीवार ३००  प्रोप्राईटर गणेशप्रसाद वाजपेयी सिद्धविनायकप्रेस बनारस ता: १६ जून सन् १८९०